# गुरुगीतास्तोत्रम् ।

भूतपूर्व्व-गवर्मेण्ट-विद्यालयसमूह-परिदर्शकेन

श्रीयुक्त नारायणचन्द्र शर्म्म कविरत्नेन

परिशोधितम् ।

( कलिकाता ८ नं निमतला घाट ष्ट्रीटस्थ

भवनात् प्रकाशितम् । )

---

कलिकातानगरे

श्रीभुवनचन्द्र वसाक-संस्थापित-संवाद-

ज्ञानरत्नाकरयन्त्रे तद्द्वारैव मुद्रितं

प्रकाशितञ्च ।

८ नं निमतला घाट ष्ट्रीट ।

१८८६

# गुरुगीतास्तोत्रम् ।

भूतपूर्व्व-गवर्णमेण्ट-विद्यालयसमूह-परिदर्शकेन

श्रीयुक्त नारायणचन्द्र शर्म्म कविरत्नेन

परिशोधितम् ।

( कलिकाता ८ नं निमतला घाट ष्ट्रीटस्थ

भवनात् प्रकाशितम् । )

---

कलिकातानगरे

श्रीभुवनचन्द्र वसाक-संस्थापित-संवाद-

ज्ञानरत्नाकरयन्त्रे तद्द्वारैव मुद्रितं

प्रकाशितञ्च ।

८ नं निमतला घाट ष्ट्रीट ।

१८८६

चक्रधर जोशी

## अथ गुरुगीतास्तोत्रम् ।

---

श्रीगुरवे नमः ।

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥
अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥

अस्य गुरुगीतास्तोत्रस्य सदाशिव ऋषिः विराट छन्दः
श्रीगुरुपरमात्माहं बीजं सः शक्तिः कौं कीलकम्
श्रीगुरुप्रसादसिद्ध्यर्थं जपे विनियोगः ।

न्यासः ।

ओं हंसां सूर्य्यात्मने अङ्गुष्ठाभ्यां नमः ॥
हंसीं सोमात्मने तर्ज्जनीभ्यां स्वाहा ।
हंसुं निरञ्जनात्मने मध्यमाभ्यां वषट् ॥
हंसैं निराभासात्मने अनामिकाभ्यां हुं ।
हंसौं अतिसूक्ष्मबोधात्मने कनिष्ठाभ्यां वौषट् ॥
हंसः अव्यक्तबोधात्मने करतलपृष्ठाभ्यां फट् ।
हंसः स्वात्मानमग्निसोमात्मपक्षयुक्तशिवात्मकम् ॥
सकारेण बहिर्यान्तं प्रविशन्तं हकारतः ।
हंसः सोऽहमिति ज्ञात्वा सोहं व्यञ्जनहीनतः ॥
पश्चात् संहृत्य चात्मानं मांसरूपं विचिन्तयेत् ।

हंसाभ्यां परिवृत्य पत्रकमलैर्दिव्यैर्जगत्कारणैः ॥
विश्वोत्कीर्ण मनेकदेहनिलयं स्वच्छन्दमायात्मया ।
तत्तद्योग्यतया स्वदेशिकतनुं भावैकदीपाङ्कुरम् ॥
प्रत्यक्षं रविविग्रहं गुरुपदं ध्यायेत् सितं चिन्मयम् ।

इति ध्यानम् ॥

ऋषय ऊचुः ।

गुह्याद्गुह्यतरा विद्या गुरुगीता विशेषतः ।
त्वत्प्रसादाद्धि श्रोतव्यं तत्सर्व्वं ब्रूहि मे प्रभो ॥

सूत उवाच ।

कैलासशिखरे रम्ये भक्तिसाधनतत्परम् ।
प्रणम्य शङ्करं भक्त्या पार्व्वती परिपृच्छति ॥

पार्व्वत्युवाच ।

नमोऽस्तु देवदेवेश सदाशिव जगद्गुरो ।
सर्व्वेश्वर महादेव गुरुदीक्षां प्रदेहि मे ॥
केन मार्गेण भोः स्वामिन् देही ब्रह्ममयो भवेत् ।
तत् कृपां कुरु मे स्वामिन् नमामि चरणौ तव ॥

श्रीभगवानुवाच ।

यस्य देवे परा भक्ति र्यथा देवे तथा गुरौ ।
तस्य ते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥
गुशब्द स्त्वन्धकारः स्याद्रुकार स्तन्निरोधकः ।
अन्धकारनिरोधित्वा द्गुरुरित्यभिधीयते ॥
यदङ्घ्रि सकलद्वन्द्वं बन्धतापनिरोधनम् ।
तारकं विपदां मध्ये श्रीगुरुं प्रणमाम्यहम् ॥
मम रूपासि देवि त्वं त्वद्भक्त्यर्थं वदाम्यहम् ।

लोकोपकारकं प्रश्नं न केनापि श्रुतं पुरा ॥
दुर्लभं त्रिषु लोकेषु तत् शृणुष्व वदाम्यहम् ।
गुरुं ब्रह्म विना नान्यत् सत्यंसत्यं वरानने ॥
वेदशास्त्रपुराणानि इतिहासादिकानि च ।
मन्त्रतन्त्रादिविज्ञानं स्मृतिरुच्चाटनादिकम् ।
शैवशाक्तागमादीनि चान्ये च बहवोमताः ॥
अपभ्रंशाः समस्ताहि जीवानां भ्रान्तचेतसाम् ।
स्वयंलोकगुरुः साक्षी जायते वेदतत्त्ववित् ॥
यज्ञव्रततपोदानं जपस्तीर्थस्तथैवच ।
गुरुतत्त्वमविज्ञाय मूढ़ा स्त्वन्यरता जनाः ।
गुरुबुद्ध्यात्मनो नान्यत् सत्यं सत्यं नसंशयः ॥
तल्लाभार्थं प्रयत्नेन कर्त्तव्यश्च मनीषिभिः ।
गूढमाया जगन्माया देहमज्ञानसंस्थितम् ॥
उदयं स्वप्रकाशेन गुरुशब्देन कथ्यते ।
देही ब्रह्म भवेद्यस्मात् त्वत्कृपार्थं वदामि ते ॥
सर्व्वपापविशुद्ध्यर्थं श्रीगुरोः पादपङ्कजम् ।
सर्व्वतीर्थावगाहस्य संप्राप्नोति फलं नरः ॥
गुरुपादाम्बुजं सम्यक् संसारार्णवतारकम् ।
अज्ञानमूलहरणं जन्मकर्म्मनिवारणम् ॥
ज्ञानवैराग्यसिद्ध्यर्थं गुरुपादोदकं पिवेत् ।
गुरोः पादोदकं पीत्वा गुरोरुच्छिष्टभोजनम् ॥
गुरुमूर्त्तिं सदा ध्यायन् गुरोः स्तोत्रं जपेत् सदा ।
काशीक्षेत्रनिवासः स्यात् जाह्नवी चरणोदकम् ॥
गुरुर्विश्वेश्वरः साक्षात् तारकं ब्रह्म निश्चितम् ।

शिवः पादान्वितोभूत्वा पादस्य श्वाच्चयोवट: ॥
तीर्थराजः प्रयागश्च श्रीगुरोः पादसन्निधौ ।
गुरुमूर्त्तिं स्मरेत् नित्यं गुरुनाम सदा जपेत् ।
गुरोराज्ञां प्रकुर्व्वीत गुरोरन्यं न भावयेत् ॥
अनन्यचित्तोयोगी स्यात् सुलभं तत्पदं शुभम् ।
तस्मात् सर्व्वप्रयत्नेन गुरोराराधनं कुरु ॥
गुरुवक्त्रे स्थिता विद्या गुरुभक्तिषु लभ्यते ।
त्रैलोक्यस्फुटवक्तारो देवतासुरपन्नगाः ॥
गुशब्दस्त्वन्धकारः स्यात् रुकारस्तन्निरोधकः ।
अज्ञानग्रासकं ब्रह्म गुरुरेव नसंशयः ॥
गुकारः प्रथमो वर्णो मायादिगुणभासकः ।
रुकारो द्वितीयो वर्णो मायाभ्रान्तिविमोचकः ॥
एवं गुरुपदं श्रेष्ठं देवानामपि दुर्लभम् ।
हाहाहूहूगणैश्चैव गन्धर्वाद्यैश्च पूज्यते ॥
ध्रुवन्तेषाञ्च सर्व्वेषां नास्ति तत्त्वं गुरोः परम् ।
आसनं शयनं वस्त्रं वाहनञ्चापि भूषणम् ॥
साधकेन प्रदातव्यं गुरोः सन्तोषकारकम् ।
गुरोराराधनं कार्य्यं स्वजीवित्वं निवेदयेत् ॥
शरीरमर्थसंप्राप्तंपशुपुत्रगृहादिकम् ।
कर्म्मणा मनसा वाचा सदा सन्तोषयेत् गुरुम् ॥
दण्डवत् प्रणमेत् भक्त्या निर्लज्जो गुरुसन्निधौ ।
शरीरमर्थं प्राणांश्च सर्व्वं तस्मै निवेदयेत् ॥
आत्मदारादिकञ्चैव सद्गुरुभ्यो निवेदयेत् ।
कृमिकीटभस्म विष्ठा - दुर्गन्धिमलमूत्रकम् ॥

श्लेष्मरक्तं त्वचं मांसं गुरोरग्रे नकारयेत् ।
संसारवृक्षमारूढाः पतन्ति नरकार्णवे ॥
येन चोद्धारितं विश्वं तस्मै श्रीगुरवे नमः ।
गुरुर्ब्रह्मा गुरुर्विष्णु गुरुर्देवो महेश्वरः ॥
गुरुरेव परं ब्रह्म तस्मै श्रीगुरवे नमः ।
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ॥
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ।
अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ॥
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ।
स्थावरं जङ्गमञ्चैव व्याप्तं येन चराचरम् ॥
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ।
चिन्मयं व्यापितं सर्व्वं त्रैलोक्यं सचराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥
सर्व्वश्रुतिशिरोरत्नविराजितपदाम्बुजम् ॥
वेदाम्बुजन्मसूर्य्याय तस्मै श्रीगुरवे नमः ।
चैतन्यं शाश्वतं शान्तं व्योमातीतं निरञ्जनम् ॥
विन्दुनादकलातीतं तस्मै श्रीगुरवे नमः ।
न गुरोरधिकं तत्त्वं न गुरोरधिकं तपः ॥
तत्त्वज्ञानात् परं नास्ति तस्मै श्रीगुरवे नमः ।
मन्नाथः श्रीजगन्नाथो मद्गुरुः श्रीजगद्गुरुः ॥
ममात्मा सर्व्वभूतात्मा तस्मै श्रीगुरवे नमः ।
ध्यानमूर्त्ति र्गुरोर्मूर्त्तिः ज्ञानमूलं गुरोः पदम् ॥
मन्त्रमूलं गुरोर्वाक्यं मुक्तिमूला गुरोः कृपा ।
नित्यं शुद्धं निराभासं निराकारं निरञ्जनम् ॥

नित्यबोधं चिदानन्दं गुरुं ब्रह्म नमाम्यहम् ।
गुरुरादिरनादिश्च गुरुः परमदैवतम् ॥
गुरुमन्त्रसमो नास्ति तस्मै श्रीगुरवे नमः ।
सप्तसागरपर्य्यन्तं तीर्थस्नानफलं तथा ॥
गुरोरङ्घ्रिजलाद्बिन्दु सहस्रांशोः सुदुर्लभम् ।
गुरुदेवो जगत् सर्व्वं ब्रह्मविष्णुशिवात्मकम् ॥
गुरोः परतरं नास्ति तस्मात् सम्पूजयेद्गुरुम् ।
ज्ञानंविनापि मुक्तिस्तु लभ्यते गुरुभक्तितः ॥
गुरोः समो नास्ति नान्यत् साधयेत् गुरुमार्गिणाम् ।
तस्मात् परतरं नास्ति वदन्तीति शिवादयः ॥
सामान्यतां तथाचान्यत् साधयेत् गुरुमार्गिणाम् ।
यस्मात् परतरं नास्ति नेति नेतीतिवै श्रुतेः ॥
मनसा वचसाचैव ब्रह्माद्या विमोहिताः ।
गुरोः कृपाप्रसादेन ब्रह्मा विष्णुर्हरस्तथा ॥
सामर्थ्यं तत्प्रसादेन केवलं गुरुसेवया ।
देवकिन्नरगन्धर्व्वाः पितृयक्षास्तु चारणाः ॥
मुनयोऽपि न जानन्ति पितरो यक्षकिन्नराः ।
ऋषयः सर्व्वसिद्धाद्या गुरुसेवापराङ्मुखाः ॥
ध्यानं शृणु महादेवि सर्व्वानन्दप्रदायकम् ।
सर्व्वसौख्यकरञ्चैव भक्तिमुक्तिप्रदायकम् ॥
श्रीमत् परं ब्रह्म गुरुं नमामि
श्रीमत् परं ब्रह्म गुरुं भजामि ।
श्रीमत् परं ब्रह्म गुरुं स्मरामि
श्रीमत् परं ब्रह्म गुरुं वदामि ॥

ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमात्रम्
द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ।
एकं नित्यं विमलमचलं सर्व्वदा साक्षिभूतं
भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ॥
नित्यं शुद्धं निराभासं निराकारं निरञ्जनम् ।
नित्यबोधं चिदानन्दं गुरुब्रह्म नमाम्यहम् ॥
आनन्दमानन्दकरं प्रसन्नंज्ञानस्वरूपं निजभावयुक्तम् ।
योगीन्द्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं नित्यमहं भजामि ॥
ब्रह्माम्बुजेकर्णिकमध्यसंस्थं सिंहासने संस्थितदिव्यमूर्त्तिम् ।
ध्यायेद्गुरुं चन्द्रकलाप्रकाशं सच्चित्सुखाभीष्टवरं दधानम् ॥
श्वेताम्बरं श्वेतविलेपनाढ्यं मुक्ताफलाभूषितचारुदिव्यम् ।
वामाङ्कपीठे स्थितदेवशक्तिं मन्दस्मितं चारु-कृपाभिधानम् ॥
यस्मिन् सृष्टिस्थितिध्वंसि निग्रहानुग्रहात्मकम् ।
कृत्यं पञ्चविधं शश्वत् भासते तन्नमाम्यहम् ॥
प्रातः शिरसि शुक्लाब्जे त्रिनेत्रं द्विभुजं गुरुम् ।
वराभयकरं शान्तं स्मरेत्तन्नामपूर्व्वकम् ॥
न गुरोरधिकं न गुरोरधिकं
न गुरोरधिकं न गुरोरधिकम् ।
शिवशासनतः शिवशासनतः
शिवशासनतः शिवशासनतः ॥
इदमेवशिवम् इदमेवशिवम् इदमेवशिवमिदमेवशिवम् ।
मम शासनतो ममशासनतः ममशासनतो ममशासनतः ।

एवम्विधं गुरुं ध्यात्वा ज्ञानमुत्पाद्यते स्वयम् ।
तदा गुरोः प्रसादेन मुक्तोऽहमिति भावयेत् ॥
गुरोर्निरूपिते मार्गे मनःशुद्धिञ्च कारयेत् ।
अनित्यं खण्डयेत् सर्व्वं यत्किञ्चिदात्मगोचरम् ॥
ज्ञेयं सर्व्वमतीतञ्च ज्ञानञ्च मन उच्यते ।
ज्ञानं ज्ञेयं समं कुर्य्यात् यथान्यान्यद्वितीयकम् ॥
एवं श्रुत्वा महेशानि गुरुनिन्दां करोति यः ।
स याति नरकं घोरं यावच्चन्द्रनिशाकरौ ॥
यावत् कल्पान्तको देही तावदेव गुरुं स्मरेत् ।
गुरुलोपो न कर्त्तव्यः स्वच्छन्दं यदि भावयेत् ॥
हुङ्कारेण न कर्त्तव्यः प्राज्ञैः शिष्यैः कथञ्चन ।
गुरोरग्रे न वक्तव्यमसत्यञ्च कदाचन ॥
यो वै जयति हुङ्कृत्य गुरुं निर्जित्य वादतः ।
अरण्ये निर्जने देशे स भवेत् ब्रह्मराक्षसः ॥
मुनिभिः पन्नगैर्व्वापि सुरैर्व्वा शापितो यदि ।
कालमृत्युभयाद्वापि गुरू रक्षति पार्व्वति ॥
अशक्तोऽपि सुराध्यक्षोऽप्यशक्ता मुनयस्तथा ।
तत्क्षणात् गुरुशापात्तु क्षयं याति न संशयः ॥
मन्त्रराजमिदं देवि गुरुरित्यक्षरद्वयम् ॥
स्मृतिवेदार्थवाक्यानां गुरुः साक्षात् परं पदम् ।
श्रुतेः स्मृतेश्च विज्ञानं केवलं गुरुसेवया ॥
ते वै सन्न्यासिनः प्रोक्ता इतरे वेशधारिणः ।
नित्यं ब्रह्मनिराकारं निर्गुणं वोधयेत् परम् ।
सर्व्वं ब्रह्मनिराभासं दीपाद्दीपान्तरं यथा ॥

गुरोः कृपाप्रसादेन आत्मारामं निरीक्षयेत् ॥
अनेन मुक्तिमार्गेण आत्मज्ञानं प्रवर्त्तते ।
आब्रह्मस्तम्भपर्य्यन्तं परमात्मस्वरूपिणम् ॥
स्थावरं जङ्गमञ्चैव प्रणमामि जगद्गुरुम् ।
वन्देऽहं सच्चिदानन्दं भेदातीतं सदा गुरुम् ॥
नित्यं पूर्णं निराकारं निर्गुणं स्वात्मसंस्थितम् ।
परात् परतरं ध्येयं नित्यमानन्दकारकम् ॥
हृदयाकाशमध्यस्थं शुद्धस्फटिकसन्निभम् ।
स्फटिकप्रतिमारूपं दृश्यते दर्पणे यथा ॥
तथात्मानं चिदाकारमानन्दं सोऽहमित्यतः ।
अङ्गुष्ठमात्रः पुरुषो ध्यायते चिन्मयो यदि ॥
तत्त्वं स्फुरति यद्भावं शृणु तत्कथयाम्यहम् ।
अगोचरं तथागम्यं नामरूपविवर्ज्जितम् ॥
निःशब्दं तं विजानीयात् स्वभावं ब्रह्म पार्व्वति ।
यथा निजस्वभावेन कर्पूरकुङ्कुमादिषु ॥
शीतलत्वं स्वभावेन तथा ब्रह्म च शाश्वतम् ।
स्वयं तथाविधो भूत्वा स्थातव्यं यत्र कुत्रचित् ॥
कीटभ्रृङ्गीरटिध्यानात् यथा भवति पार्व्वति ।
गुरुध्यानात्तथा नित्यं स्वयं ब्रह्ममयो भवेत् ॥
पिण्डे पदे तथा रूपे मुक्तास्ते नात्र संशयः ।
स्वयं ब्रह्ममयो भूत्वा तत्पदञ्च विलोकयेत् ॥
परात् परतरं नास्ति सर्व्वदेवनिरामयम् ।
तस्यावलोकनं प्राप्तं सर्व्वसङ्गविवर्ज्जितम् ॥
एकाकी निःस्पृहः शान्तः स्थातव्यं तत्प्रसादतः ।

लब्धं वाथ न लब्धं वा स्वल्पं वा बहुलं तथा ॥
निष्कामेनैव भोक्तव्यं सदासन्तुष्टमानसैः ।
सर्व्वज्ञपदमित्याहुर्देही सर्व्वमयो विभुः ॥
सदानन्दः सदाशान्तो रमते यत्र कुत्रचित् ।
यत्रैव तिष्ठते सोऽपि स देशः पुण्यभाजनम् ॥
मुक्तस्य लक्षणञ्चापि तवाग्रे कथितं मया ।
उपदेशो मया देवि गुरुमार्गेण दर्शितः ॥
गुरुभक्तिस्तथा ध्यानं सकलं तव कीर्त्तितम् ।
अनेन यद्भवेत् कार्य्यं तद्वदामि महामते ॥
लोकोपकारकं देवि लौकिकन्तु न भावयेत् ।
लौकिकं धर्म्मतो याति ज्ञानहीनं परन्तपः ॥
ज्ञानात्तु भावयेत् सर्व्वं कर्म्म निष्कर्म्मसान्यतः ।
इदन्तु भक्तिभावेन मानवैः श्रूयते यदि ॥
लिखित्वा यत् प्रदातव्यं दानं दक्षिणया सह ।
गुरुगीता मिमां देवि शुद्धसत्त्वमयोदिताम् ॥
भवव्याधिविनाशार्थं स्वयमेव जपेत् सदा ।
गुरुगीताक्षरैरेकं मन्त्रराज मिमं जपेत् ॥
अन्येच विविधा मन्त्राः कलां नार्हन्ति षोड़शीम् ।
अनन्तफलमाप्नोति गुरुगीताजपेन च ॥
सर्व्वपापप्रशमनं सर्व्वदारिद्र्यनाशनम् ।
कालमृत्युभयहरं सर्व्वसङ्कटनाशनम् ॥
यक्षराक्षसभूतानां चौरव्याघ्रभयापहम् ।
महाव्याधिगताः सर्व्वे जप्त्वा श्रुत्वा निरामयाः ॥
अथवा मोहने हरणे वश्ये जपेत् सदा ।

कुशैर्व्वा दूर्व्वया वापि आसने शुभ्रकम्बले ॥
उपविश्य ततो देवि जपेदेकाग्रमानसः ।
शान्त्यर्थमासनं शुक्लं वश्ये रक्तासनं प्रिये ॥
अभिचारे कृष्णवर्णं पीतवर्णं धनागमे ।
उत्तरे शान्तिजप्यञ्च वश्ये पूर्व्वमुखोदितम् ॥
दक्षिणे मारणं प्रोक्तं पश्चिमे च धनागमम् ।
मोहनं सर्व्वभूतानां बन्धमोक्षकरं भवेत् ॥
असाध्यं साधयेत् कर्म्म नवग्रहभयापहम् ।
दुःस्वप्ननाशनञ्चैव सुस्वप्नफलदायकम् ॥
सर्व्वशान्तिहरं नित्यं तथा बन्ध्यासुतप्रदम् ।
अवैधव्यकरं स्त्रीणां सदा सौभाग्यदायकम् ॥
आयुरारोग्यमैश्वर्य्यं पुत्रपौत्रविवर्द्धनम् ।
अकामतः स्त्री विधवा जप्त्वा मोक्षमवाप्नुयात् ॥
वैधव्यध्वंसकामेन लभ्यते त्वन्यजन्मनि ।
सर्व्वदुःखं भयं विघ्नं नाशयेत् तापहारकम् ॥
सर्व्वबाधाप्रशमनं सर्व्वकामार्थमोक्षदम् ॥
यं यं कामयते कामं तं तमाप्नोति निश्चितम् ।
कामिकस्य कामधेनुकल्पद्रुमप्रकल्पितौ ॥
चिन्तामणि श्चिन्तितस्य सर्व्वमङ्गलदायकम् ।
लिखित्वा पूजयित्वाच जपान्मोक्षमवाप्नुयात् ॥
कामेन पूजयेद्यस्तु तस्य कामफलप्रदम् ।
जपेत्तु शाक्तः शैवश्च गाणपत्यश्च वैष्णवः ॥
सिद्धिदं मोक्षदं देवि सत्यं सत्यं न संशयः ।
अथ काम्यजपस्थानं कथयामि वरानने ॥

नगरान्ते सरित्तीर्थे तथा हरिहरालये ।
शक्तिदेवालये गोष्ठे सर्व्वदेवालये शुभम् ॥
वटस्य धात्र्यामूले वा मठे वृन्दावने तथा ।
पवित्रे निर्म्मले स्थाने नित्यानुष्ठानतोऽपिवा ॥
निर्वेदनेन मौनेन जपञ्चैव समाचरेत् ।
श्मशाने निर्भयो भूत्वा जपेदेकाग्रमानसः ॥
सिद्ध्यन्ति पैप्पले मूले चूतवृक्षस्य चैवहि ।
गुरुः पूज्यो वरं मूर्ख स्तस्मात् सिद्ध्यन्ति नान्यथा ॥
शुभकर्म्माणि सर्व्वाणि दीक्षादीक्षादिसिद्धिदाः ।
संसारमलनाशार्थं भवतापान्निवर्त्तते ॥
गुरुगीतादिशुश्रूषां तत्त्वज्ञः कुरुते सदा ।
सएव सद्गुरुः साक्षात् सदा सद्धर्म्मवित्तमः ॥
तस्य स्थानानि सर्व्वाणि पवित्राणि न संशयः ।
सएव शुद्धःपूतस्च सौख्यभावे स तिष्ठति ॥
तत्र देवगणाः सर्व्वे क्षेत्रपीठे वसन्ति च ।
आसनस्थः शयानो वा गच्छन् तिष्ठन् सदाशुचिः ॥
अश्वारूढ़ो गजारूढ़ः सुषुप्तौ जाग्रतोऽपिवा ।
शुचिस्थितः सदाज्ञानी गुरुगीताजपेन च ॥
तस्य दर्शनमात्रेण पुनर्जन्म न विद्यते ।
समुद्रे च यथा तोयं क्षीरे क्षीरं जले जलम् ॥
भिन्ने कुम्भे यथाकाशं तथात्मा परमात्मनि ।
यथायथाविधो भूत्वा यत्र कुत्र स्थितोऽपि वा ॥
तथैव ज्ञानी जीवात्मा परमात्मनि सर्व्वदा ।
तस्य सर्व्वप्रयत्नेन भावभक्तिं करोति यः ।

सर्व्वहितः स्थितः सर्व्वो युक्तो भवति पार्व्वति ॥
भुक्तिमुक्तिर्दया तस्य जिह्वाग्रे च सरस्वती ।
अनेन प्राणिनः सर्व्वे तथा गीताजपेन च ॥
सर्व्वसिद्धिमवाप्नोति भुक्तिं मुक्तिं न संशयः ।
सत्यं सत्यं पुनः सत्यं धर्म्मसंख्यानयोदिता ॥
गुरुगीतासमा नास्ति सत्यं सत्यं वरानने ।
एकदेव एकधर्म्मी एका निष्ठा परन्तपः ॥
गुरोः परतरं नास्ति तत्त्वञ्चैव गुरोः पदम् ।
माता धन्या पिता धन्यो धन्यं सर्व्वं कुलं तथा ॥
धन्याच वसुधा देवी गुरुभक्तिः सुदुर्लभा ।
शरीरमिन्द्रियं प्राणा अर्थस्वजनबान्धवाः ॥
पितृमातृकुलं देवि गुरुरेव न संशयः ।
आजन्म कर्म्मणां कोटियज्ञव्रततपःक्रियाः ॥
तस्य सर्व्वफलं देवि गुरुसन्तोषमात्रतः ।
विद्याधनैर्बलेनापि मन्दभाग्यास्तु ये जनाः ॥
गुरुसेवां न कुर्व्वन्ति सत्यं सत्यं न संशयः ।
ब्रह्मविष्णुमहेशादिदेवर्षिपितृकिन्नराः ॥
सिद्धचारणयक्षाद्या ये चान्ये मुनयो जनाः ।
गुरुभावं परं तीर्थं मन्यत्तीर्थं निरर्थकम् ॥
सर्व्वतीर्थाश्रयो देवि पादाङ्गुष्ठेच वर्त्तते ।
इदं रहस्यं नो वाच्यं तवाग्रे कथितं मया ॥
सुगोप्यञ्च प्रयत्नेन परतत्त्वं प्रियासती ।
स्वामिमुख्या गणेशादिवैष्णवादिषु पार्व्वति ॥
अभक्ते वञ्चके धूर्त्ते पाषण्डे नास्तिके पुनः ।

मनसापि न वक्तव्या गुरुगीता कदाचन ॥
गुरवो बहवः सन्ति शिष्यवित्तापहारकाः ।
दुर्लभः सद्गुरुर्देवि शिष्यसन्तापनाशकः ॥
अतीवचित्तशान्तस्य गुरुभक्तिसमन्वितः ।
वक्तव्यन्तु इदं देवि मम चात्मप्रिया सती ॥
संसारसागरसमुद्धरणैकमन्त्रं
ब्रह्मादिदेवमुनिपूजितसिद्धमन्त्रम् ।
दारिद्र्यदुःखभयशोकविनाशमन्त्रं
वन्दे महाभयहरं गुरुराजमन्त्रम् ॥

इति रुद्रजामले उमामहेश्वरसंवादे
गुरुगीतास्तोत्रं समाप्तम् ।

---